स यथा रथेन धावयन्रथचक्रे[1] परिवर्तमाने प्रत्यवेक्षेतैवꣳ हाहोरात्रे परिवर्तमाने प्रत्यवेक्षते[2] तस्य ह नाहोरात्रे सुकृतं क्षिणुतो ऽक्षीयꣳ ह जयति य एवमेतद्वेद ॥ ३ ॥ तदेतदनीकं यज्ञस्य यदग्निहोत्रं स येन वा इषोरनीकमत्येति तेनैव सर्व इषुरत्येति तदेतेनैवास्य सर्वो यज्ञो ऽत्येत्येतेन सर्वो यज्ञो[3] ऽतिमुच्यते[3] ॥ ४ ॥ आगूर्ती ह वा एषो ऽमुं लोकमेति यो ऽग्निहोत्रं जुहोति सायꣳ हि हुत्वा होष्यन्प्रातर्भवति[4] प्रातर्हुत्वा होष्यन्त्सायं[5] भवति[5] तद्यथानागूर्ती[6] भवति यैवास्य सायं[7] पूर्वाहुतिः[8] सैवास्य सायमाहुतिस्तस्मात्तां मन्त्रेण जुहोत्यद्धा[9] हि[9] तद्यन्मन्त्रो ऽद्धा हि भूतं भूतꣳ ह्येषा तर्हि भवत्यथ यां द्वितीयां जुहोति सैवास्य प्रातराहुतिस्तस्मात्तां तूष्णीं[10] जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धा हि भविष्यद्भविष्यद्ध्येषा तर्हि भवति ॥ ५ ॥ तथो एव प्रातर्यैवास्य प्रातः[11] पूर्वाहुतिः[8] सैवास्य प्रातराहुतिस्तस्मात्तां मन्त्रेण जुहोत्यद्धा हि तद्यन्मन्त्रो ऽद्धा हि भूतं भूतꣳ ह्येषा तर्हि भवत्यथ यां द्वितीयां जुहोति सैवास्य सायमाहुतिस्तस्मात्तां तूष्णीं जुहोत्यनद्धा हि तद्यत्तूष्णीमनद्धा हि भविष्यद्भविष्यद्ध्येषा तर्हि भवत्येवमस्यैते उभे सायमाहुती हुते भवत उभे प्रातस्तथो[12] अनागूर्ती[13] भवति ॥ ६ ॥ नवमं ब्राह्मणम् ॥

K. III. 1. 10. M. II. 3. 3.

प्रजापतिर्ह वै प्रजाः ससृजे तदप्येतमग्निꣳ ससृजे सोऽग्निः सृष्ट इमाः प्रजा दग्धुं दध्रे[14] स इमाः प्रजा दहन्नभीयाय तमिमाः प्रजा दह्यमाना अनु-

1 Thus (without acc.) M., धावयन्र° थचक्रे the other MSS.
2 प्रत्यवेक्षते B. C. (sec. m.)
3 यज्ञोतिमु° B.
4 होष्यन्प्र तर्भवति C., होष्यन्प्रातर्भवति B.
5 °सायंभवति B. N.
6 तद्यथानागूर्ति B.
7 सायं B. C. N.
8 पूर्वाहुतिः B. N.
9 °त्यद्धाहि B. N.
10 B. ins. इंत्रेण (!)
11 प्रातः B. C. N.
12 स्तथो B.
13 °गूर्ति B.
14 दध्रे B.

2 गमयितुं[1] विपेष्टुं दध्रिरे ॥ १ ॥ सो[2] ऽनुगम्यमान उवाच पुरुषं त्वां प्रवि-
शामीति तं मा[3] त्वं जनयित्वा बिभृहीति स यथा वै मां त्वमस्मिंल्लोके भरि-
ष्यसीत्येवमेवाहं त्वाममुष्मिंल्लोके जनयित्वा भरिष्यामीति तथेति तं प्राविशत्त-
स्मादाहुः सर्वः पुरुषो ऽग्निमानिति[4] पुरुषे ह वा अग्निः प्रविष्टस्तस्मादेनं
3·4 पुरुष एव जनयते नान्यः पशुः ॥ २ ॥ स यदग्नी आधत्ते तदेनं जनयते
ऽथ यदस्मिन्जुहोति यद्यजते तदेनं जनयित्वा बिभर्ति सोऽग्निः पौरुषिर्भवति
पुरुषाद्ध्यधि जायते तस्मादग्नी आधाय नोद्वासयेत स यावद्ध वा एनौ भृत्वो-
द्वासयते तावद्धैनमेषो ऽमुष्मिंल्लोके भृत्वा परास्यत्येतावद्धै[5] नो ऽबिभरित्यथ[6]
यो हैनं यावज्जीवमेवाजरसं[7] बिभर्ति यावदेवाग्नेरायुस्तावद्धैनमेषो ऽमुष्मिंल्लोके
जनयित्वा बिभर्त्यजरं[8] वा अमृतमग्नेरायुः सो ऽजरो ऽमृतः संभवति ॥ ३ ॥
5 स यदामुं लोकमेत्यथाग्निमेव प्रविशति तमु तत्राग्निर्जनयित्वा बिभर्ति[9] स
उ तत्र पुरुष आग्नेयो भवत्यग्नेर्ह्यधि जायते तस्मादग्नी आधाय नोद्वासयेत
स यावद्ध वा एनौ भृत्वोद्वासयते तावद्धैनमेषो ऽमुष्मिंल्लोके भृत्वा परास्यत्ये-
तावद्धै[10] नो ऽबिभरित्यथ[6] यो हैनं यावज्जीवमेवाजरसं[7] बिभर्ति यावदेवाग्नेरायु-
स्तावद्धैनमेषो ऽमुष्मिंल्लोके जनयित्वा बिभर्त्यजरं[8] वा अमृतमग्नेरायुः सो ऽजरो
ऽमृतः संभवति ॥ ४ ॥ दशमं ब्राह्मणम् ॥

---

1 अनुगमयितुं B. C. N.
2 सो B.
3 मां B.
4 ग्निमा।निति B. N. C. (orig.)
5 •ता।वद्धै B.
6 Thus (without acc.) M. only, बिभर्त्यथ the other MSS.
7 यावज्जीवमेवा• MSS.
8 •जरं MSS.
9 बिभर्ति B. N.
10 •तावद्धै M. T., •तावद्धै B. C. N. My